अथ भगवतः सातिशयत्वाद् न तन्नाग्न्यं तेषां तद्धेतुः, तर्हि तत एव तन्नीहारस्य मांसचक्षुषामदृश्यत्वाद् न दोषः । सामान्यकेवलिभिस्तु विविक्तदेशे तत्करणाद् दोषाभावः । नापि सप्तमाष्टमौ, रिरंसानिद्रयोर्मोहनीयकार्यत्वात् , भगवति तु तदभावात् । तन्न कार्यमपि तस्य तेन विरुध्यते । नापि सहचरादि, यतस्तत्सहचरं छद्मस्थत्वम् , अन्यद् वा निगदेत् ? । न तावदाद्यम् , उभयवाद्यविवादास्पदत्वेनासिद्धेः, अस्मदादौ तथादर्शनात्, तत्साहचर्यनियमोपगमे गमनादेरपि तत् सहचरं स्यात् । अन्यत्तु करवक्त्रचालनादि भवति तत्सहचरम् , न तु केवलित्वेन विरुद्धम् । एवमुत्तरचरादिकमपि न केवलित्वेन विरुध्यते । इति स्थितं कवलाहारसर्वज्ञत्वयोरविरोधादिति हेतुः सिद्धिवधूसंबन्धबन्धुर इति ॥ २७ ॥

इति प्रमाणनयतत्त्वालोकालङ्कारे श्रीरत्नप्रभाचार्यविरचितायां रत्नाकरावतारिकाख्यलघुटीकायां प्रत्यक्षस्वरूपनिर्णयो नाम द्वितीयः परिच्छेदः ॥

